यह पोथी शहर बनारस दिवाकर छापाखाने मे यज्ञोपवितकी पोथी छपी शिवचरन के रहासाकी न महल्ला भदैनी काली महल के पास वा: महीपनारायन पांडे का: बल्लसोधा पंडितबटुक ॥ यह पोथी जीसको लेना हो सो चौक के पश्चिम कुंजगली के फाटक पर रामचरन के दुकान पर मिलेगी ॥ संवत १९३२ चैत्रसुदी १४

॥ कर्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत् ॥ शणसूत्रमयं राज्ञो वैश्यस्याविककौशिकम् ॥ दण्डनि॰ ॥
...पालाशौ क्षत्रियौ खादिरौ ॥ पैलूदुम्बरौ वैश्यौ दण्डानर्हन्ति धर्मतः ॥

प॰वि॰ १

॥ॐ श्रीगणेशाय नमः अथोपनयनं तत्र शुद्धसमये रविगुरुचंद्रतारादिशुद्धौ जन्मतो गर्भाष्टमेऽब्दे वानुकल्पे
षोडशसंवत्सराभ्यंतरे ब्रह्मवर्चसकामस्य पंचमे पुनरुदगयने आपूर्यमाणपक्षे नध्यायषष्ठीरिक्ताद्यतिरिक्तति
थौ रविगुरुशुक्रान्यतमवारे मध्यान्हादर्वाक् कुमारपित्राभ्युदयिके कृते तदभावे आचार्येणैव कृते ब्राह्मणा
न्माणवकं च भोजयित्वा सशिखक्षौरं कृत्वा तत्क्षौरस्नानानंतरं यथाशक्त्यलंकृतं कृत्वा बहिःशालायां तुषकेशशर्क
रादिशून्यपरिष्कृतभूमौ आचार्योऽग्निस्थापनं कुर्यात् तत्र हस्तमात्रपरिमितचतुरस्रभूमिं कुशैः करणाकसमू
हनानंतरं गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमे
णानामिकांगुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य नवीनकांस्यपात्रेणाग्निमानीय स्वाभिमुखं निदध्यात् ततः
कुमारमाचार्य्यः शिष्यद्वाराग्नेः पश्चाद्दक्षिणपार्श्वेऽवस्थापयति ततः कुमारं बद्धांजलिं संबोधयति ॐ ब्रह्मच
र्यमागामिति ब्रूहि इति प्रेषानंतरं ॐ ब्रह्मचर्यमागामिति कुमार आह ततः ॐ ब्रह्मचार्यसानीति ब्रूहीत्याचा
र्येणोक्ते ॐ ब्रह्मचार्यसानीति कुमारस्त्वाह अथ माणवकमाचार्यो वासः परिधापयति तत्र आचार्यपठनीयो
मंत्रः ॐ येनेंद्राय बृहस्पतिर्वासः पर्यदधादमृतं तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे ततो माण

राम॰ १

वकस्य द्विराचमनम् अथ माणवकस्य वेष्टनत्रयेणाततप्रवरग्रंथियुतां मेखलामाचार्य्यो बध्नाति तत्र माणवक
पठनीयो मंत्रः इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात् प्राणापानाभ्यां बलमादधाना स्वसा देवी सु
भगा मेखलेयं ओं युवा सुवासाः परिवीत आगात् स उ श्रेयान्भवति जायमानः तं धीरासः कवय उन्नयंति स्वाध्यो
मनसा देवयंत इति ततः आचाराद्यज्ञोपवीतसहितभांडाष्टतयंत्रा ब्राह्मणेभ्यो दत्वा ततस्तद् अमुकगोत्रः स्वकी
योपनयनकर्मविषयकसत्संस्कारप्राप्त्यर्थं इदं भांडाष्टतयं सयज्ञोपवीतं सदक्षिणं यथानामेति ततो यज्ञोपवी
तं परिदधाति माणवकः ओं यज्ञोपवीतमिति मंत्रस्य परमेष्ठी ऋषिर्लिंगोक्ता देवता त्रिष्टुप् छंदो यज्ञोपवीतपरि
धाने विनियोगः ओं यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवी
तं बलमस्तु तेजः इति मंत्रेण ततः एणाय मजिनं तूष्णीं परिधत्ते ततो माणवकः केशपरिमितपालाशदंडमाचार्य्यः
तूष्णीं तस्मै प्रयच्छति तं च यो मे दंड इति प्रजापतिर्ऋषिर्दंडो देवता यजुर्दंडग्रहणे विनियोगः यो मे दंडः परापतद्वै
हायसोधि भूम्या तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसाय इति मंत्रेण माणवको गृह्णाति ततः आचार्य्यो वारि
णास्य मंजलिं पूरयित्वा कुमारस्यांजलिं तेनैवांजलिजलेन पूरयति ओं आपो हि ष्ठा मयोभुवस्तान ऊर्ज्जे दधातन महे

य॰ २ रणाय चक्षसे ॐ यो वः शिवतमो रसस्तस्य भाजयते ह नः उशतीरिव मातरः ॐ तस्मा ऽ अरं गमाम वो यस्य क्षयाय जि
न्वथ आपो जनयथा च नः इति त्र्यृग्भिः ततः सूर्यमुदीक्षस्वेति आचार्यप्रैषानन्तरं ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्र
मुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं ॐ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शर
दः शतं भूयश्च शरदः शतात् इत्यनेनादित्यं पश्यति अथ कुमारस्य दक्षिणांसं सहृदयं दक्षिणहस्तेन स्पृशत्या
चार्यः ॐ मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यं
इति मन्त्रेण ततः कुमारस्य दक्षिणहस्तं गृहीत्वा तं पृच्छति को नामासि श्री अमुकशर्माहं भो इति कुमार आह कस्य
ब्रह्मचार्यसीत्याचार्यः भवत इति कुमार आह पुनराचार्यो भाषते ॐ इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमा
चार्यः श्री अमुकशर्मन् अथ माणवकं बद्धाञ्जलिं पूर्वादिदिक्षु प्रदक्षिणामुपस्थानं कारयति अथाचार्यो माणव
कं भूतेभ्यः परिददाति तत्र आचार्यस्य मन्त्रपाठः ॐ प्रजापतये त्वा परिददामीति प्राच्यां ॐ देवाय त्वा सवित्रे परि
ददामि इति दक्षिणस्यां ॐ अद्भ्यस्त्वौषधीभ्यः परिददामि इति प्रतीच्यां ॐ द्यावापृथिवीभ्यां त्वा परिददामि इति एम॰
उदीच्यां ॐ विश्वेभ्यस्त्वा देवेभ्यः परिददामि इत्यधः ॐ सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै इत्यूर्ध्वं ततोऽग्निं प्रदक्षि २

नामदिशी

णीशत्वआचार्य्यंदक्षिणादिशिउपविशतिमाणवकः ततः पुष्पचंदनतांबूलवासांस्यादाय ततः ओं मद्यकर्त्तव्यो
पनयनहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्पचंदनतांबू
लवासोभिर्ब्रह्मत्वेनत्वामहंवृणे इतिब्राह्मणंवृणुयात् ओंवृतोस्मीतिप्रतिवचनं पुष्पचंदनताम्बूलवस्त्राण्यादाय
अद्यकर्तव्योपनयनकर्म्मणिहोतृत्वकर्म्मकर्त्तुममुकगोत्रममुकशर्म्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवा
सोभिः होतृत्वेनत्वामहंवृणे इतिहोतारंवृणुयात् स्वस्तीतिप्रतिवचनं ओंयथाविहितंकर्म्मकुर्वित्याचार्य्येणोक्ते
ओंकरवाणीतिब्राह्मणोवदेत् ततोग्नेर्दक्षिणतः शुद्धमासनंदत्वा तदुपरिभागग्रान्कुशानास्तीर्य्यब्रह्माणमग्निप्र
दक्षिणंकारयित्वास्मिन्कर्म्मणित्वम्मेब्रह्माभवेत्यभिधाय भवानीतितेनोक्ते तदुपरिब्राह्मणमुदङ्मुखमुपवे
श्य ततः प्रणीतापात्रंपुरतः कृत्वावारिणापरिपूर्य्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरि
निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यांतं अ
ग्नितः प्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदिशिपवित्रछेदनार्थंकुशत्रयंपवित्रार्थंसाग्रमनंतर्गर्भकुशपत्रद्वयंप्रो
क्षणीपात्रं आज्यस्थालीसंमार्जनार्थंकुशाः उपयमनकुशाः समिधस्तिस्रः स्रुवः आज्यंषट्पंचाशदुत्तराचार्ध

प॰ ३ मुष्टिशतद्वयावच्छिन्नामतंडुलपूर्णापात्रं पवित्रच्छेदनकुशानां पूर्वं पूर्वं दिशिक्रमेणासादनीयं ततः पवित्रछेदन
कुशैः पवित्रे छित्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधायानामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां
तज्जलं किंचित्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीं त्रिरभिषिच्य प्रोक्षणीजलेनासादितवस्तुसेचनं कृत्वाऽग्नि
प्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् आज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततः कुशं प्रज्वाल्याज्योपरि भ्र
दक्षिणं भ्रामयित्वा वन्हौ तत्प्रक्षिप्य स्रुवं त्रिः प्रतप्य संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्र
णीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निदध्यात् तत आज्यमग्नेरवतार्य त्रिः प्रोक्षणीवदुत्पूयावेक्ष्य सत्य
पद्रव्ये तन्निरसनं कृत्वा पुनः प्रोक्षण्युत्पवनं ततउत्थायोपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा
तूष्णीं घृताक्तास्तिस्रः समिधः प्रक्षिपेत् उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीता
पात्रे पवित्रे निधाय पातितदक्षिणजानुः ब्रह्मणान्वारब्धः समिद्धतमेग्नौ स्रुवेणाज्याहुतीर्जुहोति तत्र तत्तदा
हुत्यनंतरं स्रुवावस्थितघृतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ इंद्रा राम॰ ३
य स्वाहा इदमिंद्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ॐ

भूःस्वाहाइदंभूःॐभुवःस्वाहा इदंभुवःॐस्वःस्वाहा इदंस्वःएतामहाव्याहृतयःॐत्वन्नोऽअग्नेवरुणस्यविद्वा
न्देवस्यहेडोअवयासिसीष्ठाःयजिष्ठोवन्हितमःशोशुचानोविश्वाद्वेषांॐसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नी
वरुणाभ्यांॐसत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौअवयक्ष्वणोवरुणंरराणोवीहिमृडीक
ॐसुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यांॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाअसि अयानोयज्ञ
वहास्ययानोधेहिभेषजंॐस्वाहा इदमग्नयेॐयेतेशतंवरुणंयेसहस्रंयज्ञियाःपाशावितताःमहान्तः तेभिर्नो
अद्यसवितोतविष्णुर्विश्वेमुंचन्तुमरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्के
यःॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंॐश्रथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्याम
गहा इदंवरुणाय एताःसर्वप्रायश्चित्तसंज्ञकाःॐप्रजापतयेस्वाहा इदंप्रजापतये इतिमनसाप्राजापत्यम् ॐ
अग्नयेस्विष्टकृतेस्वाहाइदमग्नयेस्विष्टकृते इतिस्विष्टकृद्धोमः ततःसंस्रवप्राशनंआचमनंचततोब्रह्मणोदक्षि
णादानं ॐअद्यएतस्मिन्नुपनयन होमकर्म्मणिकृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदंपूर्णपात्रं
प्रजापतिदैवतंअमुकगोत्रायामुकशर्म्मणेब्राह्मणायब्रह्मणोदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात्

य॰ ओंमस्मीति प्रतिवचनं ततो ब्रह्मग्रंथिविमोकः ततः ओं सुमित्रिया न आप ओषधयः संतु इति पवित्राभ्यां जलमानीय
४ तेन शिरः संमृज्य ओं दुर्मित्रियास्तस्मै संतु योस्मान्द्वेष्टि यं च वयं द्विष्मः इत्यैशान्यां प्रणीतान्युब्जीकरणं ततस्तरणा
क्रमेण बर्हिरुत्थाप्य घृतेनाभिधार्य हस्तेनैव जुहुयात् ओं देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमं दे
व यज्ञ ओं स्वाहा वाते धाः स्वाहा इति बर्हिर्होमः ततआचार्य्यः कुमारस्यानुशासनं करोति ओं ब्रह्मचार्य्यसीत्या
चार्य्यः ओं असानीति ब्रह्मचारी ओं अपोशान इत्याचार्य्यः ओं अशानीति कुमार आह ओं कर्मकुर्वित्याचार्य्यः ओं
करवाणीति माणवकः ओं मा दिवा सुषुप्स्व इत्याचार्य्यः न स्वपानीति कुमारः ओं वाचं यच्छ इत्याचार्य्यः ओं यच्छा
नीति कुमारः ओं समिधमाधेहीत्याचार्य्यः ओं आदधानीति माणवकः ओं अपोशानेत्याचार्य्यः ओं अशानीति
कुमारः अथाग्नेरुत्तरतः प्रत्यङ्मुखायोपविष्टायाचार्य्यचरणोपसंग्रहणपूर्वकमुपसन्नायाचार्य्यसमीक्ष्यमा
णायाचार्य्यः स्वयमपि समीक्षिताय तस्मै निवारितशंखतूर्य्यादिशब्द इष्टां संवेशो सावित्रीमन्वाह तत्र प्रथमावृ
त्तौ ओं भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं पुनर्वारद्वयं अन्ननुसहपाठो
विशेषः अथ माणवक आचार्य्यदक्षिणादिशि अग्निपश्चिमोपविष्टो घृताक्तशुष्कनिषिद्धेतरेधनेन जुहुया राम॰ ४

त् ततः ॐ अग्ने सुश्रवः सुश्रवसं माकुरु ॐ यथात्वमग्ने सुश्रवः सुश्रवा असि ॐ एवं मा ॐ सुश्रवः सौश्रवसं
ॐ यथात्वमग्ने देवानां यज्ञस्य निधिपा असि ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ततः प्रदक्षिणम
ग्निं वारिणा पर्य्युक्ष्य उत्थाय स्वप्रादेशमितां घृताक्तां पलाशसमिधमादाय ॐ अग्नये समिधमाहार्षं बृहते जात
वेदसे यथात्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिंधे जीव
पुत्रो ममाचार्य्यो मेधाव्यहमस्यान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासम् ॐ स्वाहा इतिमंत्रे
णाग्नौ जुहुयात् एवं समिदंतरद्वयं जुहुयात् ॐ अग्ने सुश्रवसं माकुरु ॐ यथात्वमग्ने सुश्रवः सुश्रवा असि ॐ एवं
मां सुश्रवः सौश्रवसं कुरु ॐ यथात्वमग्ने देवानां यज्ञस्य निधिपा असि ॐ एवमहं मनुष्याणां वेदस्य निधिपो
भूयासम् ततः प्रदक्षिणमग्निं पर्य्युक्ष्य तूष्णीं पाणी प्रतप्य मुखं प्रति मंत्रांते स्वमृशति ॐ तनूपा अग्नेसि तन्वं
मे पाहि ॐ आयुर्दा अग्नेस्यायुर्मे देहि ॐ वर्चोदा अग्नेसि वर्चो मे देहि ॐ अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॐ मे
धां मे देवः सविता आदधातु ॐ मेधां मे देवी सरस्वती आदधातु ॐ मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ ततः
सर्वगात्राणि दक्षिणपाणिना स्पृशेत् अत्र प्रत्येकं मंत्रः ॐ अंगानि च म आप्यायन्ताम् इति सर्वगात्रालंभने ॐ वा

य· ५ वाँमआप्यायतामिति मुखालंभने ॐप्राणाश्चमआप्यायतामितिनासिकयोः ॐचक्षुश्चमआप्यायतामिति
चक्षुषोः ॐश्रोत्रंचमआप्यायतामितिश्रोत्रे ॐयशोवलंचमआप्यायतामितिमंत्रपाठमात्रंततोदक्षिणाकराना
मिकाग्रगृहीतभस्मनाललाटेग्रीवायांदक्षिणवाहुमूलेहृदिचत्र्यायुषंकुर्यात् तत्रयथासंख्येनमंत्रचतुष्टयंॐ
त्र्यायुषंजमदग्नेः इतिललाटे ॐकश्यपस्यत्र्यायुषम् इतिग्रीवायाम् ॐयद्देवेषुत्र्यायुषम् इतिदक्षिणवाहुमू
ले ॐतन्नोअस्तुत्र्यायुषम् इतिहृदि ततोव्यस्तपाणिभ्यांपृथिवींस्पृशन्नभिवादनंकुर्यात् तत्रप्रकारः ॐअमु
कगोत्रोहममुकप्रवरोहममुकशर्म्माहंभोवैश्वानरत्वामभिवादये ततोनैकेवकामेणासंवोध्यवरुणमभिवा
द्याचार्य्यंतथैवाभिवादयेत् ततः आयुष्मान्भवसौम्येत्याचार्योब्रूयात् ततोभिक्षापात्रमादायप्रथमंमातुः स
काशात् ॐभवतिभिक्षांमेदेहि इतिप्रार्थनानंतरंतद्दत्तांचाक्षतापाचार्य्योपनिवेदयेत् तथैवभिक्षांतरंयाचेत् त
तः आचार्य्येणभुंक्ष्वेत्यनुज्ञातोभिक्षांस्वीकुर्य्यात् ततःफलपुष्पचंदनघृतद्रव्याश्चवेणाब्रह्मचारिदक्षिणाकरस्थ
पृष्ठेनाचार्य्यः पूर्णाहुतिंदद्यात् तत्रमंत्रः ॐमूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निंकविं सम्राजम
तिथिंजनानामासन्नापात्रंजनयंतदेवाः स्वाहा इदमग्नयेततः स्रुवेणभस्मानीयदक्षिणानामिकाग्रगृहीतभस्म

नाॐ त्र्यायुषं जमदग्नेः इति ललाटे ॐ कश्यपस्य त्र्यायुषम्॥ इति ग्रीवायां ॐ॥ यद्देवेषु त्र्यायुषम् इति दक्षिणबा
हुमूले ॐ तन्नो अस्तु त्र्यायुषम् इति हृदि इति त्र्यायुषं कुर्य्यात् कुमारपक्षे तन्नो इत्यस्य स्थाने तत्ते इति विशेषः
अथ क्षारलवणमधुमांसादिनिवृत्तिः उद्धृतजलस्नानदंडकृष्णाजिनधारणवृक्षारोहणविषमभूमिलंघनन
ग्नस्त्रीनिरीक्षणस्त्रीसंभोगव्यसनव्यावृत्तिरूपा ब्रह्मचारिणो नियमाः तद्दिने ब्रह्मचारी वाग्यतो हः शेषं स्थि
त एवगमयेत् ततः सायंसंध्यां कृत्वा तस्मिन्नेवाग्नौ पूर्ववत् पर्युक्षणपरिसमूहने कृत्वा वाचं विसृजेत् परिसमू
हनं तु शुष्कनिषिद्धेतरेंधनस्याग्नौ प्रक्षेपः ततः संध्यामुपास्य प्रतिदिनं सायं प्रातरपि ब्रह्मचारिणा कर्तव्या अ
थ वेदारंभः तत्र कृतनित्यक्रिय आचार्य्यः कुशैः हस्तमात्रपरिमितां भूमिं परिसमूह्य तान् कुशानैशान्यां परित्य
ज्य गोमयोदकेनोपलिप्य स्रुवमूलेन उत्तरोत्तरतः प्रागग्रप्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिका
गुष्ठाभ्यामुद्धृत्य जलेनाभ्युक्ष्य कांस्येनाग्निमानीय आभिमुखमुपसमाधाय पुष्पचंदनताम्बूलवस्त्राण्यादा
य ॐ अद्य कर्तव्यवेदारंभहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्म्माणं ब्रा
ह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात् ॐ वृतोऽस्मीति प्रतिवच

य: ६ नं ॐ यथाविहितं कर्म्म कुर्वित्याचार्य्यः ॐ करवाणीति तेनोक्ते अग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्राग
ग्रान्कुशानास्तीर्य्य ब्रह्माणमग्निप्रदक्षिणक्रमेणाभ्रामयित्वा अस्मिन्कर्म्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ॐ
भवानीति तेनोक्ते ब्रह्माणमुदङ्मुखं तत्रोपवेश्य प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्म
णो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशा
नान्तम् ब्रह्मणोऽग्निपर्य्यन्तम् नैरृत्याद्वायव्यान्तम् अग्नितः प्रणीतापर्य्यन्तं ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्र
छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनन्तर्गर्भं कुशपत्रद्वयं प्रोक्षणीपात्रमाज्यस्थाली संमार्जनकुशाः
उपयमनकुशाः समिधस्तिस्रः स्रुवः आज्यं पूर्णपात्रं पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीय
ततः पवित्रच्छेदनकुशैः पवित्रे छित्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय द्वाभ्यामनामिका
गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनं ततः प्रोक्षणीपात्रं वामहस्ते गृहीत्वा दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां
त्रिरुद्दिंगनम् ततः प्रणीतोदकेन प्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीजलेन यथासादितवस्तून्यभिषिच्याग्निप्रणी राम ६
तयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् तत आज्यस्थाल्यामाज्यं निरूप्याधिश्रयणम् ततः कुशं प्रज्वाल्याज्यस्याग्ने

ग्नोपरि प्रदक्षिणांभ्रामयित्वा चाग्नौ तत्प्रक्षेपः ततस्त्रिः स्रुवप्रतपनं संमार्ज्जनं कुशानामग्रैरंतरतो मूलैर्बाह्य
तः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निदध्यात् तत आज्यमग्नि प्रदक्षिणं भ्रा
मयित्वा वर्त्ताग्न्योर्निदध्यात् तत आज्ये प्रोक्षणीवदुत्पवनं अवेक्ष्य सत्यपद्रव्ये तन्निरसनं ततः प्रोक्षण्युत्प
वनं तत उत्थायोपयमनकुशानादाय प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः क्षिपेत् त
त उपविश्य सपवित्र प्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्य्युक्ष्य प्रणीतापात्रे पवित्रे निधाय ब्रह्मणान्वार
ब्धः पातितदक्षिणजानुः समिद्धतमेग्नौ जुहुयात् तत्र प्रथमाहुतिचतुष्टयेन स्रुवावस्थितहुतशेषघृतस्य प्रो
क्षणीपात्रे प्रक्षेपः ओं प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ इंद्राय स्वाहा इदमिंद्राय इत्याघारौ ओं अ
ग्नये स्वाहा इदमग्नये ओं सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ततः प्राकृतोऽन्वारब्धकर्त्तृको होमः ॐ अं
तरिक्षाय स्वाहा इदमंतरिक्षाय ओं वायवे स्वाहा इदं वायवे ओं ब्रह्मणे स्वाहा इदं ब्रह्मणे ॐ छंदोभ्यः स्वाहा इ
दं छंदोभ्यः एताः सामान्याहुतयः ओं प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ओं देवेभ्यः स्वाहा इदं देवेभ्यः
ओं ऋषिभ्यः स्वाहा इदं ऋषिभ्यः ओं श्रद्धायै स्वाहा इदं श्रद्धायै ओं मेधायै स्वाहा इदं मेधायै ॐ सदसस्पतये स्वा

य· ७

हा इदंसदसस्पतये ॐ अनुमतयेस्वाहा इदमनुमतये ततोऽन्वारब्ध कर्त्तृको होमः तत्तदाहुत्यनंतरंश्रावाव
स्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः ॐभूःस्वाहा इदंभूः ॐभुवःस्वाहा इदंभुवः ॐस्वःस्वाहा इदंस्वः एता
महाव्याहृतयः ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवह्नितमः शोशुचानोवि
श्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐसत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसो
व्युष्टौ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यां ॐअयाश्चाग्नेस्य
नभिशस्तिपाश्चसत्वमित्वमयाअसिअयानोयज्ञंवहास्यानोधेहिभेषजꣳस्वाहा इदमग्नये ॐयेतेशतं
वरुणंयेसहस्रंयज्ञियाः पाशावितता महान्तः तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतः स्वर्काः स्वाहा
इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यः ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्य
मꣳश्रथाय अथावयमादित्यव्रतेतवानागसोअ दितयेस्यामस्वाहा इदंवरुणाय इतिसर्वप्रायश्चित्तसंज्ञ
काः ॐप्रजापतयेस्वाहा इदंप्रजापतये इतिमनसा इतिप्राजापत्यं ॐअग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्वि राम·
ष्टकृते इतिस्विष्टकृद्धोमः ततः संस्रवप्राशनम् ततआचम्य ॐअद्यकृतैतत्तद्दारंभहोमकर्मणिकृताकृ ७

तावेक्षणारूपब्रह्मकर्मप्रतिष्ठार्थं इदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय ब्रह्मणे दक्षि
णां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ॐ स्वस्तीति प्रतिवचनं ततो ब्रह्मग्रंथिविमोकः ॐ सुमित्रियान आप
ओषधयः संतु इति पवित्राभ्यां प्रणीताजलमानीय तेन शिरः सम्मृज्य ॐ दुर्मित्रियास्तस्मै संतु यो स्मान्द्वेष्टि यं
च वयं द्विष्मः इति मंत्रेण ऐशान्यां प्रणीतां न्युब्जीकुर्यात् ततः स्तरणा वर्हिरानीय घृतेनाभिघार्य्य क्रमेण हस्तेनैव
जुहुयात् ॐ देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमं देव यज्ञं स्वाहा वाते धाः स्वाहा इति वर्हिर्होमः
ततः काश्मीरगमनं ततः इष्टांसके वेदारंभं गुरुः कारयेत् तत्र क्रमः ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य
धीमहि धियो यो नः प्रचोदयात् ॐ इति प्रणवांतं पठित्वा पंक्तिनमस्कारं च कारयित्वा ॐ सविधानिन्दुवस्य
तघृते द्योधयतातिथिम् अस्मिन्हव्याजुहोतन सुसमिद्धाय शोचिषे इति कंडिकांतरं वा फक्किकां वा पाठयेत्
ततः सम्प्रणावं स्वस्ति वाचयित्वा उत्थाय फलपुष्पसमन्वितब्रह्मचारिदक्षिणाकरस्पृष्टेन स्रुतस्रोतेन पूर्णाहुतिं
दद्यात् ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविं सम्राजमतिथिं जनानामासन्ना पा
त्रं जनयंत देवाः इति पूर्णाहुतिः ततः उपविश्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना त्र्यायुषं ज

य॰ ८ मदग्नेरितिललाटे ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायां ॐ यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले ॐ तन्नो अस्तु
त्र्यायुषमिति हृदि त्र्यनेनैव क्रमेण ब्रह्मचारिललाटादावपि तत्र तत्रेत्यति विशेषः इति वेदारंभः अथ समावर्त्त
नं तत्र शुभे दिने प्रक्षीभूय आचार्य्य स्नास्यामीति कुमार आचार्य्यं भाषते तत स्ना हीत्याचार्य्यः ततो ब्रह्मचा
रिणि आचार्यसन्निहित दक्षिणादिशि उपविष्टे कृतस्नानादिराचार्य्यः कुशैर्हस्तमात्रां भूमिं परिसमूह्य तानैशान्यां
परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेनोत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणोद्धृत्य जलेनाभ्युक्ष्य कांस्ये
नाग्निमानीय प्रत्यङ्मुखं निदध्यात् ततः पुष्पचंदनतांबूलवासांस्यादाय ॐ अद्यामुकस्य कर्त्तव्यसमावर्तनहोम
कर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभि
र्ब्रह्मत्वेन त्वामहं वृणे वृतोस्मीति प्रतिवचनं यथाविहितं कर्म कुर्वित्यभिधाय ॐ करवाणीति तेनोक्ते अग्नेर्दक्षिण
तः शुद्धमासनं दत्वा तदुपरि प्रागग्रान्कुशानास्तीर्य्यास्मिन्कर्म्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ॐ भवानीति तेनोक्ते
ब्रह्माणमुदङ्मुखं तत्रोपवेश्य ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्या राम॰ ८
ग्नेरुत्तरतः कुशोपरि निदध्यात् ततः परिस्तरणम् बर्हिषश्चतुर्थभागमादायाग्नेयादीशानान्तम् ब्रह्मणोऽग्निपर्य्यन्तं

नैर्ऋत्याद्वायव्यांतं अग्नितः प्रणीतापर्य्यंतं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् पवित्रकार
णार्थं साग्रमनंतर्गर्भं कुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्ज्जनार्थं कुशाः उपयमनकुशाः समिधस्ति
स्रः स्रुवः आज्यं पूर्णपात्रं पवित्रच्छेदनकुशानां पूर्वं पूर्वदिशि क्रमेणासादनीयम् ततः पवित्रच्छेदनकुशैः पवित्रे छि
त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधायानामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुत्पूय प्रोक्षणीपात्रं
वामकरेणादायानामिकांगुष्ठगृहीतपवित्राभ्यां तज्जलं किंचित्रिः मक्षिप्य प्रणीतोदकेन प्रोक्षणीमभ्युक्ष्य प्रोक्ष
णीजलेन यथासादितवस्तून्यभिषिच्याग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् तत आज्यस्थाल्यामाज्यनिर्वा
पः अधिश्रयणं ततस्तृणं प्रज्वाल्याज्यस्याग्रे अग्नेः परिप्रदक्षिणं भ्रामयित्वा वन्हौ तत्प्रक्षिप्य स्रुवं त्रिः प्रतप्य संमार्ज
नकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात् तत
आज्यमग्निप्रदक्षिणं भ्रामयित्वावतार्य त्रिः प्रोक्षणीवदुत्पूयावेक्ष्य सत्यपद्रव्ये तन्निरसनं कृत्वा पुनः पूर्ववत्प्रोक्ष
णमुत्पवनम् तत उत्थायोपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः
क्षिपेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्य्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातित

य. ९ दक्षिणजानुः समिद्धतमेऽग्नौ ब्रह्मणान्वारब्धः स्रुवेणाज्याहुतीर्जुहुयात् तत्र प्रथमाहुतिचतुष्टये प्रत्याहुत्यनंतरं
स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ इंद्राय स्वा
हा इदमिंद्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ततोन्वारब्ध
कर्तृकहोमः ॐ अंतरिक्षाय स्वाहा इदमंतरिक्षाय ॐ वायवे स्वाहा इदं वायवे ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे।
ॐ छंदोभ्यः स्वाहा इदं छंदोभ्यः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ देवेभ्यः स्वाहा इदं देवेभ्यः ॐ
ऋषिभ्यः स्वाहा इदं ऋषिभ्यः ॐ श्रद्धायै स्वाहा इदं श्रद्धायै ॐ मेधायै स्वाहा इदं मेधायै ॐ सदसस्पतये स्वा
हा इदं सदसस्पतये ॐ अनुमतये स्वाहा इदमनुमतये ततो ब्रह्मणाऽन्वारब्धो जुहुयाद्दशाहुती दर्शयेति तत्तदा
हुत्यनंतरं स्रुवावस्थिताज्यस्य प्रोक्षणीपात्रप्रक्षेपः ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐ स्वः स्वाहा इ
दं स्वः एता महाव्याहृतयः ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचा
नो विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐ सत्वन्नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो
व्युष्टौ अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां ॐ अपश्चाग्नेस्यन राम. ९

भिशस्तिपाश्चसत्वमित्वमयाअसि अयानोयज्ञंवाहास्य यानोधेहिभेषजꣳस्वाहा इदमग्नये ॐयेतेशतंव
रुणायेसहस्रंयज्ञियाःपाशावितताम्महान्तः तेभिर्न्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतः स्वर्क्काः स्वाहा इ
दंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्क्केभ्यः ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमं
श्रथायअथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणायइतिसर्वप्रायश्चित्तं ॐप्रजा
पतयेस्वाहा इदंप्रजापतयेइतिमनसाइतिप्राजापत्यम् ॐअग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते इतिस्वि
ष्टकृत् ततःसंश्रवप्राशनम्ततआचम्य ॐअद्यकृतैतत्समावर्त्तनहोमकर्म्मणिकृताकृतावेक्षणरूपब्रह्मक
र्म्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहं
संप्रददे इतिदक्षिणांदद्यात् ॐस्वस्तीतिप्रतिवचनं ततोब्रह्मग्रंथिविमोकः ततःपवित्राभ्यांप्रणीताजलेन
ॐसुमित्रियानआपओषधयःसंतु इतिमंत्रेणशिरःसंमृज्य ॐदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः
इतिमंत्रेणैशान्यांप्रणीतान्युब्जीकरणं ततस्तरणक्रमेणबर्हिरानीयघृतेनाभिघार्यहस्तेनैवजुहुयात् ॐदेवागा
तुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञꣳस्वाहा वातेधाःस्वाहा इतिबर्हिर्होमः ततोब्रह्मणान्वारब्धक

य र्हेकंकर्म्म ततोऽग्निपश्चिमोपविष्टो ब्रह्मचारी परिसमूहनं कुर्यात् तत्र घृताक्त शुष्क निषिद्धे तरेंधनेन पंचाहुती
१० र्हस्तेनैव जुहुयात् ओंअग्नेसुश्रवः सुश्रवसं माकुरु ओंयथात्वमग्ने सुश्रवः सुश्रवा असि ओंएवं मांसुश्रवः सौश्र
वसंकुरु ओंयथात्वमग्ने देवानां यज्ञस्य निधिपा असि एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ततः प्रदक्षि
णमग्निं वारिणा पर्य्युक्ष्य उत्थाय घृताक्तां प्रादेशमि तसमिधमादाय जुहुयात् तत्र मंत्रः ओंअग्नये समिधमा
हार्षं बृहते जातवेदसे यथात्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्च्च
सेन समिंधे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्व न्नादो भूयासं स्वा
हा ततः समिदंतरद्वयमनेनैव क्रमेण प्रत्येकं हुत्वा उपविश्य तेनैव क्रमेण पंचाहुती घृताक्ताः शुष्क निषिद्धे
तरेंधनेन जुहुयात् ओंअग्नेसुश्रवः सुश्रवसं माकुरु ओंयथात्वमग्ने सुश्रवः सुश्रवा असि ओंएवं मांसुश्रवः सौ
श्रवसंकुरु ओंयथात्वमग्ने देवानां यज्ञस्य निधिपा असि ओंएवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ततः प्र
दक्षिणमग्निं वारिणा पर्युक्ष्य तत्र हस्तौ पाणी प्रतप्य मुखं प्रतिमंत्रं तेन विमृशति ओंतनूपा अग्नेसि तन्वं मे पाहि ओं राम
आयुर्दा अग्नेस्यायुर्मे देहि ओंवर्च्चोदा अग्नेसि वर्च्चो मे देहि ओंअग्ने यन्मे तन्वा ऊनं तन्म आपृण ओंमेधां मे देवः १०

सविता आदधातु ॐमेधांमेदेवीसरस्वती आदधातु ॐमेधांमे अश्विनौदेवावाधत्तां पुष्करस्रजौ ततःसर्वगात्रादिषुदक्षि
णपाणिनास्पर्शः तत्रप्रत्येकंमंत्रः ॐअङ्गानिचमआप्यायंताम् इतिसर्वगात्रालंभनेवाक्चमआप्यायतामितिमुखा
लंभने ॐप्राणश्चमआप्यायतामितिनासिकयोः ॐचक्षुश्चमआप्यायतामितिचक्षुर्द्वयस्पर्शः ॐश्रोत्रंचमआप्याय
तामितिश्रोत्रद्वयस्पर्शः ॐयशोबलंचमआप्यायतामितिमंत्रपाठमात्रं ततोदक्षिणानामिकाग्रगृहीतभस्मनाल
लाटेग्रीवायांदक्षिणबाहुमूलेहृदिचत्र्यायुषंकुर्यात् यथासंख्येनमंत्रचतुष्टयम् ॐत्र्यायुषंजमदग्नेरितिलला
टे ॐकश्यपस्यत्र्यायुषं इतिग्रीवायां ॐयद्देवेषुत्र्यायुषं इतिदक्षिणबाहुमूले ॐतन्नोअस्तुत्र्यायुषं इतिहृदि त
तोव्यस्तपाणिभ्यांपृथिवींस्पृशन् प्रथमंवैश्वानरंसंबोध्याभिवादयेत् तत्राऽमुकगोत्रोहममुकप्रवरोहममुकश
र्माहंभोवैश्वानरत्वामभिवादये इतिप्रकारः ततस्तथैववरुणंसंबोध्याभिवादयेत् तथैवाचार्यंचाभिवादयेत्
ततःआयुष्मान्भवसौम्यइत्याचार्योब्रूयात् ततोग्नेरुत्तरतःप्रागग्रान्कुशानास्तीर्य तदुपरिदक्षिणोत्तरक्रमेणास्था
पितवारिपूर्णकलशाष्टतयेकलशानांपुरतःप्रागग्रेषुकुशेषुस्थित्वाएकस्मादाम्रपल्लवेनोदकंगृहीत्वा ॐयेप्सु
तरग्नयःप्रविष्टागोह्यउपगोह्योमयूषोमनोहास्खलोविरुजस्तनूदूषुरिंद्रियहातान्विजहामियोरोचनस्तमिहगृ

य० त्वामि इतिमंत्रेण ततस्तेनमामभिषिंचामि श्रियै यशसे ब्रह्मणो ब्रह्मवर्च्चसाय इत्यात्मानमभिषिंचति ततो द्वितीयघट
११ स्थमुदकं गृहीत्वाम्रपल्लवेनाभिषिंचति ॐ येनश्रियमकृणुतां येनावमृशतां सुरां येनाक्षावभ्यषिंचतां यद्वां तद
श्विना यशः इतिमंत्रेण ततस्तेनैव क्रमेण तृतीयकलशस्थजलमादाय ॐ आपोहिष्ठा मयोभुवस्तान ऊर्जे दधात
नमहे रणाय चक्षसे इति मंत्रेणाभिषिच्य तेनैव क्रमेण चतुर्थकलशस्थजलमादाय ॐ यो वः शिवतमो रसस्तस्य
भाजयतेह नः उशतीरिव मातरः इतिमंत्रेणाभिषिच्य पंचमकलशस्थजलं तथैवादाय ॐ तस्मा अरंगमाम वो
यस्य क्षयाय जिन्वथ आपो जनयथा च न इति मंत्रेणाभिषिच्य ततोऽवशिष्टकलशत्रितयजलं तथैव प्रत्येकं गृही
त्वा तूष्णीं प्रत्येकमभिषिंचति ततो मेखलामोचनं शिरोभागेन ॐ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्र
थाय अथा वयमादित्य व्रते तवानागसो अदितये स्याम इतिमंत्रेण दंडकृष्णाजिने तूष्णीं भूमौ निधाय अन्यद्वस्त्रं
परिधायोत्तरीयं च कृत्वाचम्य वद्धांजलिरादित्यमुपतिष्ठेत ब्रह्मचारी ॐ उद्यन्भ्राजिभृष्णुरिंद्रो मरुद्भिरस्थात्प्रात
र्यावभिरस्थात् दशसनिरसि दशसनिं मा कुर्वाविदन्मागमय उद्यन्भ्राजिभृष्णुरिंद्रो मरुद्भिरस्थात् दिवायावभिर राम०
स्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मागमय उद्यन्भ्राजिभृष्णुरिंद्रो मरुद्भिरस्थात्सायंयावभिरस्थात् सह ११

स्त्रसनिरसिसहस्त्रसनिंमाकुर्वोविदन्मागमय इतिमंत्रेण ततोदधितिलान्वाप्राश्याचम्यनखरोमादीञ्छेदयित्वास्न
त्वाचम्य प्रादेशमितउदुंबरकाष्ठेनदंतधावनम् ॐअन्नाद्यायव्यूहध्वंसोमोराजायमागमत् समेमुखंप्रमार्क्ष्यतेय
शसाचभगेनच इतिमंत्रेण ततोदंतकाष्ठंपरित्यज्याचम्यसुगंधिद्रव्येणोद्वर्त्तनानंतरंस्नात्वाद्विराचम्य चंदनकुंकु
मादिनानासिकायामुखस्यालंभने ॐप्राणापानौमेतर्प्पय ॐचक्षुर्मेतर्प्पय ॐश्रोत्रंमेतर्प्पय इतिमंत्रेणानुलि
पति ततःप्राचीनमावीत्यदक्षिणाभिमुखःपातितवामजानुःकृतापसव्योद्विगुणभुग्नकुशान्सतिलजलान्यादा
य आस्तृतकुशानयोपरिपितृंस्तर्प्पयेत् ॐपितरःशुंधध्वमितिमंत्रेणाततःसव्यंकृत्वाआचम्यानुलिप्यजपेत् ।
ॐसुचक्षाअहमक्षीभ्यांभूयासंसुवर्च्चोमुखेनसुश्रुत्कर्णाभ्यांभूयासम् इति ततोऽहतवस्त्रपरिधानं ॐपरिधास्यैय
शोधास्येदीर्घायुत्वायजरदष्टिरस्मिशतंचजीवामिशरदःपुरुचीरायस्पोषमभिसंव्ययिष्ये इतिमंत्रेण ततोय
ज्ञोपवीतपरिधानं ॐयज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतं
बलमस्तुतेजः इतिमंत्रेणद्वितीयायग्रदानं यज्ञोपवीतमितिप्रजापतिऋषिर्यजुरुपवीतदेवतायज्ञोपवीतपरिधाने
विनियोगः यज्ञोपवीतमसियज्ञस्यत्वोपवीतेनोपनह्यामि आचमनं अथोत्तरीयं ॐयशसामाद्यावापृथिवी

य. १२ यसमेन्द्राबृहस्पती यशोभगश्चमाविदद्यशोमाप्रतिपद्यताम् इतिमंत्रेण ततःपुष्पमालाग्रहणेमंत्रः ॐयाआ
हरज्जमदग्निःश्रद्धायैमेधायैकामायेंद्रियायताअहंप्रतिगृह्णामियशसाचभगेनच इतिमंत्रेणपुष्पमालाग्रहणं
ततःपुष्पमालापरिधानं ॐयद्यशोप्सरसामिंद्रश्चकारविपुलंपृथुतेनसंग्रथिताःसुमनसआबध्नामियशोमयि
इतिमंत्रेणपुष्पमालापरिधानं अथवस्त्रप्रतिष्ठाअथोष्णीषेणशिरोवेष्टनं ॐयुवासुवासाःपरिवीतआगात् सउ
श्रेयान्भवतिजायमानः तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंत इतिमंत्रेण ततःकुंडलेपरिदधाति
ॐअलंकरणमसिभूयोलंकरणंभूयात् ततोंजनं ॐवृत्रस्यासिकनीनकश्चक्षुर्दाअसिचक्षुर्मेदेहि ततआदर्शेआ
त्मदर्शनं ॐरोचिष्णुरसि इतिमंत्रेण ततश्छत्रग्रहणं ॐबृहस्पतेछदिरसिपाप्मनोमामंतर्द्धेहि तेजसायशसोमा
मंतर्द्धेहि इतिमंत्रेण ततःपद्भ्यामुपानहौप्रतिगृह्णाति ॐप्रतिष्ठेस्थोविश्वतोमापातम् इतिमंत्रेण ततोवैणवदंड
धारणं ॐविश्वाभ्योमानाष्ट्राभ्यःपरिपाहिसर्वतः इतिमंत्रेण ततःस्नातकस्यनियमाःगानवादित्रनृत्यत्यागःनातंग
मनंक्षेमेसतिनरात्रौग्रामान्तरगमनंनधावेत् नकूपेवेक्षणंनवृक्षारोहणंफलत्रोटनंअमार्गेणनगच्छेत् नग्नोनस्ना राम. १२
यात् नसंधिसर्पणं नविषमभूमिलंघनंअश्लीलंनोपवदेत् उदितास्तसमयेसूर्यंनोपपश्येत्जलमध्येसूर्यछाया

य॰
१२

शस्यं न पश्येत् देवे वर्षति न गच्छेत् उदके आत्मानं न पश्येत् आजातलोमिकां प्रमत्तां पुरुषाकृतिं षण्ढं च न गच्छेत् दिसादि
तत आचार्य्यो यववरां दक्षिणां दद्यात् ततः मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविं॰ सम्राजमति
थिं जनानामासन्नापात्रं जनयंत देवाः स्वाहा इति मंत्रेण फलपुष्पसमन्वितघृतश्रुवेण माणवकदक्षिणाकरस्थेन
उत्या पूर्णाहुतिमाचार्य्यः कुर्य्यादिति ग्रीवायां ॐ यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले तन्नो अस्तु त्र्यायुषमिति हृदि इ
ति त्र्यायुषं कुर्य्यात् अनेनैव क्रमेण कुमारललाटादावपि तत्र तन्नो इत्यस्य स्थाने तत्ते इति विशेषः ततो मूर्द्धाक्षतादिग्रहणं
॥ इति श्री महामत्तक महासामंताधिपति श्री रामदत्त विरचिता वाजसनेयिनां उपनयनकर्मपद्धतिः समाप्ता ॥ अथ साम
ग्री सेलो १ मौली ० केसर २५ वतासा ५ आटा चावल पुष्प १२ पुष्पमाला धूप २ दीप १ ताम्बूल ७ यज्ञोपवीत ९ अरणी नापात्र ३
प्रोक्षणीपात्र २ कांस्यपात्र ६ छायापात्र १ सुवर्ण १ कुश १ श्रुवा १ गोमय ८ रेणो गोहे पलाश समिधा सेर २ पूर्णपात्र २ उपरो
५ धोती [illegible] ५ । २ कुपीन ५ मृगचर्म १ पलाशदंड १ गूलर शाखा २ मेखला मूंज की १ सुहारि या सेर १ पुरवा ८ लोटिया ८ ना
रियल २ खडाऊं जोडा १ पट्टी २ चंगेर १ लाठी ५ ग्रथली १ कसाहू [illegible] घृत [illegible] तिल ३ दधि १ सुपारी ११ आम्रपल्लव वृक्षादेपत्र
० अंजन १ दर्पण १ वसु ५ मोंती उपानहौ वस्त्राण्येतत् दूर्वादोने ९ अबीर अवेत [illegible] ब्राह्मणभोजन दक्षिणा यथा वर्णं स्वर्ण इति साम

